श्रीगायत्रीप्रसादेन यत्किञ्चित् प्रोच्यते मयाः।
गुमस्संगृह्यताम् तस्माद् गुणदोर्षाववेकिभिः॥ १ ॥

दृश्यमानस्य लोकस्य प्रधानम् कारणम् मतम्।
क्षेत्रक्षेत्रज्ञसंयोगः प्रोक्तोऽयम् सांख्यदर्शने॥ २ ॥

सांख्यदर्शने प्रोक्तः अयम् क्षेत्रक्षेत्रज्ञसंयोगः दृश्यमानस्य लोकस्य प्रधानम् कारणम् मतम्।
`पङ्ग्ववदुभयोरपि संयोगस्तत्कृतः सर्गः ईतीदम् सांख्यकारिकावाक्यमत्र प्रमाणम्।'

प्रकृतेः क्षेत्रसंज्ञा स्यात् पुमान् क्षेत्रज्ञ उच्यते।
प्रकृत्या तस्य संयोगाल्लोकोऽयम् सुज्यते सदा॥ ३ ॥

साम्यावस्था गुणानाम् या प्रकृतिस्सा खलूच्यते।
सत्त्वंरजस्तमांस्येते कार्यतो हि गुणास्त्रयः॥ ४ ॥

सत्त्वं रजः, तम इति त्रयो गुणाः। तेषाम् साम्यावस्थैव प्रकृतिरित्युच्यते। `सत्त्वरजस्तमसाम् साम्यावस्था प्रकृतिरिति वाचस्पतिमिश्राः ।'

बुद्धिस्ततप्रथमा सृष्टिर्द्वितीया स्यादहङ्कृतिः।
अहङ्कारसमुत्पन्नं तन्मात्रं भूतकारणम्॥ ५ ॥

प्रकृतेः प्रथमा सृष्टिर्महदिति कथिता बुद्धिः। द्वितीया सृष्टिरहङ्कारः। अस्मादेवाहङ्करात् भूतानम् कारणानि तन्माताणि समुत्पन्नानि।

इन्द्रियाणि दशैकञ्च विकारोऽहङ्कृतेस्तथा।
प्रधानो यो गुणस्तिस्मिन्नहङ्कारे स तत्परः॥ ६ ॥

प्रधानम् वैकृते सत्त्वम् तैजसे रज उच्यते।
तमस्तु तामसे मुख्यं संज्ञा ज्ञेया हि कार्यतः ॥ ७ ॥

एकादेशेन्द्रियाणि चाहङ्कुरस्यैव विकारः। तथाहि यो गुणः अहङ्कारे प्रधानः स अहङ्कारः तत्पर एव भवति। वैकृताहङ्कारे सत्त्वगुणः, तैजसाहङ्कारे रजोगुणः, तामसाहङ्कारे च तमोगुमश्च प्रधानाः। एवम् कार्यात एव संज्ञा ज्ञातव्या।

ज्ञानेन्द्रियाणि पञ्चैव कर्मेन्द्रियाणि पञ्च च।
अहङ्कारस्य कार्यम् तन्मनासं चान्तरिन्द्रियम्॥ ८ ॥

चक्षुः, श्रोत्रं, जिह्वा, घ्राणम् त्वक्- इत्येतानि ज्ञानेन्द्रियाणि पञ्च। एवम् वाक्, पाणिः पादः, पायुः, उपस्थः- इत्येतानि पञ्च कर्मेन्द्रियाणि। मनश्चान्तरिन्द्रियम्। इत्थमेकादशेन्द्रियाणि तैजसाहङ्कारसहकृतसात्त्विकाहङ्कारात् समुत्पद्यन्ते। पञ्चविंशतितमा सांख्यकारिका गौडपादभाष्यसहिता द्रष्टव्या।

अहङ्कारो महत् चित्तम् मनश्चत्वारि दर्शने।
अन्तः कारणमित्येकम् लभन्ते नाम कार्यतः ॥९॥

एकमेवान्तः करणम् वृत्तिभेदात्- अहङ्कारो, महत्, चित्तं, मन - इति दर्शने कथ्यते. योगॉदर्शने तु वृत्तिभेदात् त्रैविध्यं महदहङ्कारमनः स्वरूपमेव प्रसिद्धम्। न तु चातुर्विध्यम्। चित्तस्य चात्र मते महित बुद्ध्यपरपार्यये प्रवेश इति विज्ञानभिक्षुवाक्यमात्र द्रष्टव्यम्। (सांख्यप्रवचनभाष्यम्)

वैविध्यम् दृश्यते कार्ये चैकत्त्वम् करणे तथा।
कार्यं सर्वं विनिष्पन्नं कारणादेव तत्त्वतः॥ १० ॥

प्रधानस्य हि कार्यत्त्वात् मनस्त्रैगुण्यमीर्यते।
गुणानाम्मानसे तस्मात् वृत्त्याख्यं कर्म दृश्यते ॥ ११॥

त्रिगुणात्मकात् प्रधानान्निष्पन्नम् मनोऽपि त्रिगुणात्मकं मनोऽपि त्रगुणात्मकम् भवति। कारणगुणाः कार्यगुणानारभन्त इति न्यायः। अत एव मनसि गुणानाम् वृत्त्याख्यम् कर्म दृश्यते।

ययेदम् धार्यते चित्तं तत्सत्त्वं ज्ञायते यया।
ज्ञेया सा चित्तवृत्तिस्तु सर्वा ब्राह्मणवृत्तिवत्॥ १२ ॥

`यैः प्रमाणादिलक्षणव्यापारैः चित्तं जीवति ते तद्वृत्तय उच्यन्ते द्विजानां याजनादिवत्।' इति विज्ञानभिक्षुणोक्तं वाक्यमत्र प्रमाणम् (१-५) वृत्त्यैव चित्त्वसत्त्वं इत्यत्र ज्ञेयम्। अत एव वृत्तिषु गृहीतासु चित्तमपि निगृह्यते।

असंख्येया हि चित्तस्य वृत्तयः परिकीर्तिताः।
एकत्र गणने पञ्च वृत्तयः शक्तिसंज्ञकाः ॥ १३॥

प्रमाणं प्रथमा वृत्तिर्द्वितीया तु विपर्ययः।
विकल्पाख्या तृतीया स्यान्निद्राऽन्या स्मृतिपञ्चमी ॥१४॥

यथार्थानुभवः शास्त्रे प्रमेति कथ्यते बुधैः ।
प्रमायाश्च प्रमाणं तत् करणम् शास्त्रकीर्तितम् ॥ १५॥

प्रत्यक्षमनुमानञ्च शब्दस्तत्त्वविनिर्णये।
त्रयमेतत्प्रमाणं स्यात् सर्वं तेनैव साध्यते ॥ १६ ॥

युक्ताभ्यामिन्द्रियार्थाभ्यां जायमानः प्रमा ग्रहः ।
प्रत्यक्षं तत्प्रमाणं स्यादनुमानस्य कारणम् ॥१७॥

`प्रमेयसिद्धिः प्रमाणाद्धि' इति न्यायमनुसृत्य योगदर्शने प्रमाणत्रयमङ्गीक्रियते। प्रत्यक्षं अनुमानं, शब्दः इति प्रमाणत्रयेम योगदर्शने तत्त्वनिर्णये सर्वं साध्यते। इन्द्रियं यदा विषयेण सह संबद्धं भवति तदा जायमानं ज्ञानं तत्करणमपि प्रत्यक्षम्। अनुमानमपि प्रत्यक्षमेवाधारीकृत्य प्रवर्तते।

वर्तमानेन सम्बन्धाद्वृत्तवर्तिष्यमाणयोः।
ज्ञानं यज्जायते तत्र ह्यनुमानं प्रमाकरम्॥ १८ ॥

लिङ्गाद्व्याप्तिमतो ज्ञानं लिङ्गिनो जायते यदा।
प्रमा साऽनुमितिस्त्त्र ह्यनुमानं च कारणम् ॥

नियतसाहचर्यकात् लिङ्गात् यदा लिङ्गनो ज्ञानं जायते तत्र `अनुमितिरॄ' प्रमा `अनुमानं' प्रमाणम्।

यथार्थदर्शिनो वाक्यं निश्चियात्मकम्।
वेदाः वृद्धाश्च विज्ञेयाः प्रमाणं तत्त्वनिर्णये ॥ १९ ॥

अतद्रूपप्रतिष्टं यज्ज्ञानं सत्यत्ववर्जितम्।
अविद्याख्यं भवेद्योगे संज्ञा तस्य विपर्ययः ॥ २० ॥

ज्ञानस्वरुपे अप्रतिष्ठं मिथ्यात्वगर्भितम् ज्ञानम् योगे विपर्यय इति कथ्यते अविद्यापरपर्यायः।

वृत्तिर्या वस्तुशून्यत्त्वे शब्दज्ञानानुपातिनी।

विकल्प इति विख्याता ज्ञेया सा योगदर्शने ॥ २१ ॥

जाग्रद्वृत्तिस्तथा वृत्तिः स्वाप्नितकी तमसा यदा।
अभिभूते भवेतां सा वृत्तिर्निद्रते कथ्यते ॥ २२ ॥

अभावश्चान्यवृत्तीनां तामसो जायते तदा।
मलिना चित्तसत्त्वस्य वृत्तिर्निद्रेति कीर्तिता ॥ २३ ॥

निद्राया वृत्तिरूपत्त्वं स्मरणादेव बुध्यते।
जागृतौ यादृशी दृष्टा स्मृतिर्निद्रा च तादृशी ॥ २४ ॥

विना वृत्तिं कथं ज्ञानम् ज्ञानाभावे कथम् स्मृतिः।
तस्मान्निद्रा भवेद्वृत्ति स्मृत्यास्सत्त्वाद्धि जागृतौ ॥ २५ ॥

जाग्त् स्वप्नवृत्ती यदा तमसा मोहकारिणाऽभिभूयेते, वृत्त्यन्तराणाम् तामसेऽभावे जाते तदा चित्तस्य सद्वृत्तिरुपिणी मलिना वृत्तिः `निद्रा' इति कथ्यते। जाग्रदवस्थायां निद्राया अनन्तरं यादृशी स्मृतिः जायते निद्रा तादृशीति ज्ञातव्या। स्मृतिरनुभवाधीना, अनुभवश्च वृत्तयदीनः। अतः नित्रा चित्तवृत्तिः।

गृहीतग्राहिणी वृत्तिश्चित्तस्य स्मृतिरुच्यते।
ऊना स्यादनुभूतेस्मा नाधिका तु कदाचन॥ २६ ॥

या चित्तवृत्तिः गृहीतमेव विषयं गृह्णाति सा `स्मृति' रिति कथ्यते। अनुभवे यावान् विषयः तस्मादनधिक विषया वृत्तिरित्यर्थः. यावन्तं विषयमनुभवामः, तावन्तं, तन्न्यूनं वा स्मरामः न तु तदधिकम्।

गृहीतग्रहिणीत्युक्ते दोषस्स्याल्लक्षणे तथा।
ज्ञाने चानुगताकारे ह्यतिव्याप्तिः प्रसज्यते ॥ २७ ॥

अतिव्याप्तिर्न वा तस्मिन् लक्षणे भिन्नरूपतः।
ज्ञाने चानुगताकारे तदूनो विषयो न हि ॥ २८ ॥

"घटः, घटः,घटः" इत्येकवस्तु विषयकज्ञानेऽपि गृहीतग्राहित्वमस्तीती `अतिव्याप्तिप्रसङ्गः' । परन्तु ज्ञाने चास्मिन् पूर्वगृहीतविषयादूनो विषयो न भवति। स्मृतौ तु विषयः `अनुभवविषयादनधिकविषय' अतो न तत्राव्याप्तिरिति योगसिद्धान्तचन्द्रिकाऽत्रानुसन्धेया।

वृत्तिभिस्सह चित्तस्य निरोधो योग उच्यते।
योगस्स्माधिनामाऽसौ `राजयोग' इतीर्यते ॥ ३० ॥

योगस्स्माधिस्समापत्तिरित्यनर्थान्तरम्। ध्ययमालम्बयायं समाधिर्द्विधा भवति। सम्प्रज्ञातसमाधिः प्रथमः, असम्प्रज्ञातश्च द्वितीयः।

यदा ध्येयम् प्रविज्ञातम् समाधौ चित्तरोधतः।
सम्ब्रज्ञातस्तदा ज्ञेयस्समाधिस्स चतुर्विधः ॥ ३१ ॥

सवितर्कविचारौ द्वौ सानन्दसास्मितौ तथा।
सम्प्रज्ञातस्य चत्वारो भेदा योगो प्रकीर्तिताः ॥ ३२ ॥

यस्मिन् समाधौ ध्येयं वस्तु सम्यक् विज्ञायते स समाधिः `सम्प्रज्ञात' इति कथ्यते। सवितर्कसमाधिः, सविचारसमाधिः, सानन्दसमाधिः, सास्मितासमाधिरिति चत्वारोऽस्य भेदाः।

चित्तस्यालम्बनं स्थलं वितर्के पाञ्चभौतिकम्।
सविचारे तथा सूक्ष्मं चन्मात्रं भूतकारणम् ॥ ३३ ॥

यदा चित्तं पाञ्चभौतिकं स्थूलमालम्ब्य स्थूलमालम्ब्य भवति तदा स समाधिः `सवितर्क' नामकः। यदा च सूक्ष्मं तन्मात्रादिकमालाम्बते तदा `सविचार' नामकः।

ग्राह्योऽयं विषयो योगे प्रथमश्चित्तनिग्रहे।
सानन्दसास्मितौ पश्चात् भेदौ ग्रहणपूर्वकौ ॥ ३४ ॥

एकीभावो यदा बुद्धेर्ग्रहीत्रा पुरुषेण च।
अस्मिता स समाधिस्स्यात् पुरुषो विषयस्तदा ॥ ३५ ॥

सत्त्वप्रकर्षहेतोस्तु साक्षात्कारो हि जायते।
आह्लादयस्य यदा ज्ञेयस्सानन्दो हि तदा स्फुटः ॥ ३६ ॥

यदा बुद्धिः ग्रहीत्रा पुरुषेण सहैकीभावमाप्नोति स समाधिस्समास्मिता नामः `एकात्मिका संविदस्मितेति' भाष्यम्। `अस्मि इत्येतावन्मात्राकारत्वादस्मिता इत्यर्थः।' सत्त्वप्रकर्षएम जायमानस्य आह्लादस्य साक्षात्कारः `सानन्दः' अयमानन्दश्चित्तधर्म एैति व्याख्यातारः।

यदा ताः वृत्त्यस्सर्वा विरामं यान्ति सर्वशः।
संस्कारश्शिष्यते योगे चित्तस्यानन्यगामिनः ॥ ३७ ॥

वैराग्यं हि परं हेतुस्समाधेर्यस्य विद्यते।
असम्प्रज्ञातनामाऽसौ समाधिः काशते तदा ॥ ३८ ॥

यतो ध्येयार्थशून्योऽयं वस्तुशन्यत्त्वमाश्रितः।
अतोऽस्मिन् ध्येयवैराग्यं समाधौ कारणं मतम् ॥ ३९ ॥

सर्ववृत्तिनिरोधे यदा केवलस्संकारश्शिष्यते तदा `असम्प्रज्ञात' समाधिः। अपरवैराग्यं परवैराग्यमिति वैराग्यं द्विविधम्। तत्र स्त्रयन्नपानादिषु दृष्टेषु स्वर्गादिषु च वैतृष्ण्यम् प्रथमम्। गुणस्याशेषव्यवहारेषु तृष्मविरोधस्ततस्सत्त्वपुरुषयोः शुद्धिसाम्ये कैवल्यम् (३-५५)

योगेन योगो ज्ञातव्य इत्युक्तं योगिल्लजैः॥
प्रथमेन तथा चान्यो ज्ञेयो योगस्तथा शनैः ॥ ४० ॥

सम्प्रज्ञातायोगेन शनैरसम्बप्रज्ञातयोगो ज्ञातव्य इत्यर्थः।

उपायप्रत्ययस्साध्यो योगश्श्रद्धादिकारणैः।
मुमुक्षूणामयं ग्राह्यो विशेषाद्राजयोगिनाम् ॥ ४१ ॥

श्रद्धा, वीर्यं, स्मृतिः, समाधिः, प्रज्ञा- इति श्रद्धादिकारणम्। पूर्वपूर्वस्य तदनन्तरजनकतया कैवल्यकारणत्वम्।

जन्ममात्रादसम्प्रज्ञत्रस्समाधिस्सुलभो न हि।
तस्माद्देवमनुष्याणां नूनं श्रद्धादिराहितः ॥ ४२॥

भवहेतुर्विदेहानामषाट्कौशिकदेहनाम्।
प्रकृत्यां लीयमानानां समाधिस्सैव कथ्यते ॥ ४३ ॥

अविद्यैव भवस्यान्तो ज्ञेया मिथ्यात्मिका हि सा।
अस्य मूलं यतोऽविद्या योगस्यातो हि हेयता ॥ ४४ ॥

असम्प्रज्ञातो द्विविधः- उपायप्रत्ययो भवप्रत्ययश्च। मुमुक्षूणामुपायप्रत्ययः पूर्वोक्तः द्वितीयो भवप्रत्ययः अविद्याहेतुकः विदेहानां

प्रकृतिलयानाञ्च। मांसशोणितलोममेदोऽस्थिमज्जारूपषाट्कौशिकदेहरहिता विदेहाः पिण्डपादानन्तरं भूतेन्द्रियेषु लीनाः। अव्यक्तमहदहङ्कारपञ्चतन्मात्राणामन्यतममात्मत्वेन प्रतिपन्नास्तदुपासनया पिण्डपातानन्तरं प्रकृत्यादिकारणेषु लीनाः प्रकृतिलयाः। भवप्रत्ययासम्प्रज्ञातसमाधेरविद्या मूलमिति स त्याज्यः।

समाधिस्सुखसाध्योऽयं तीव्रसंवेगहेतुना।
उपाया विविधास्सन्ति समाधेस्सिद्धादायकाः ॥ ४५ ॥

तीव्रवैराग्येण समाधिस्सुखसाध्यः। येषाटमुपायानुष्ठानशैघ्र्यं तेषामासन्न स्समाधिलाभः। `श्रध्दमूलो योग' इति वाचस्पतिमिश्रैरुक्तं, `यो यच्छ्रद्धस्स एव स (भि. गीता. १७.५) इति भगवदुक्तं च श्रद्धाप्राधान्यं प्रतिपादयतः।'

भक्तियोगः क्रियायोगः चर्यायोगस्तथैव च।
कर्मयोगो हठो मन्त्रो ज्ञानयोगो लयस्तथा ॥ ४६ ॥

अद्वैतोलक्ष्ययोगश्च सिद्धिर्ब्रह्मस्तथा शिवः।
वासनाध्यानयोगौ च सर्वे सूत्रेषु दर्शिताः ॥ ४७ ॥

पञ्चदशयोगप्रकाराः पातञ्जलयोगॉसूत्रेभ्य एव ज्ञातुं शक्या इति योगसिद्धान्त चन्द्रिकाकृतः नारायणतीर्थस्वामिनः प्रत्यपीदन्। विशेषस्तत्र द्रष्टव्यः।

भक्त्याहीशः प्रसन्नस्सनन् मोक्षं शीघ्रं प्रयच्छति।
तस्मादीशप्रणिध्यानादन्तराया भवन्ति न ॥ ४८ ॥

क्लेशाकर्मविपाकैश्च तथा संस्काररुपिभिः।
न कदाऽपि परामृष्टः पुरुषस्त्वीश्वरो मतः ॥ ४९ ॥

सर्वज्ञास्सर्वगस्सर्वं कालञ्चाप्यतिवर्तते।
कालस्यापि च हेतुत्त्वादीश्वरो नित्य उच्यते ॥ ५० ॥

प्राणवस्य जापन्नित्यं तथा तस्यार्थभावनात्।
एकाग्रं जायते चित्तं परमात्मा प्रकाशते ॥ ५१॥

तस्मादीशप्रणिध्यानादन्तराया भवन्ति न।
स्वरुपज्ञानमप्यस्य योगिनस्सम्प्रजायते ॥ ५२ ॥

अन्तरायास्तु विक्षेपाः ज्ञातव्या विघ्नकारकाः।
विक्षेपोहपतं चित्तं जायते त्क्तभावनम् ॥ ५३ ॥

`व्याधिस्त्यानसंशयप्रमादालस्याविरतिभ्रान्तिदर्शनाऽलब्ध भूमिकत्वानवस्थितत्वानि चित्तविक्षेपाः तेऽन्तरायाः इति योगसूत्रम् (१-३०) दुःखदौर्मनस्याङ्गमेजयत्वश्वासप्रश्वासा विक्षेपसहभुवः' इति च (१-३१) योगसूत्रमत्र द्रष्टव्ये।

यथैवेश्वरश्शुद्धः प्रसन्नः केवलः पुमान्।
तथा बुद्धिविसंवेदी जीवो जात्यादिवर्जितः ॥ ५४ ॥

इत्येवम् जायते बुद्धिर्जीवात्मपरमात्मनोः।
स्वरूपज्ञानपूर्णा हि समाधिस्थस्य योगिनः ॥ ५५ ॥

विक्षेपैस्तैर्यदा चित्तं बाधते यिगनं तदा।
अभ्यासेन च संस्कार्तुं प्रयतेत स संयमी ॥ ५६॥

परस्य सुखसांप्राप्तौ मित्रत्त्वं भावयेत् सुधीः।
कुरणां च तथा दुःखे पुण्ये हर्षञ्च भावयेत् ॥ ५७ ॥

अपुण्ये च तथोपेक्षां सततं भावयेत् बुधः।
प्रसन्नं लभते चित्तं चर्यायोगोऽयमुच्यते ॥ ५८ ॥

प्रधानो मारुतः प्राणः प्राणाधारो हि मानवः।
प्राणायामेन चित्तस्य निग्रहस्सुलभस्सदा ॥ ५९ ॥

प्रयत्नात् कुक्षितो वायुं नासिकापुटमार्गातः।
शनैर्निस्सारयेत् सम्यक् प्रश्वासोऽयं निगद्यते ॥ ६० ॥

रेचितस्य बहिर्वायोः स्थापनं कुम्भकं मतम्।
श्वासप्रश्वासकुम्भाश्च हठयोगो निगद्यते ॥ ६१ ॥

हठयोगो योगबीजं प्राणायामः प्रकीर्तितः `सूर्याचिन्द्रमसोरैक्यं हठ इत्यभिधीयते' इत्यादिस्मृतिवाक्यानि प्राणायामस्य हठयोगत्वं प्रतिपादयन्तीति प्रमाणम्।

गन्धदिर्विषयो यस्यां प्रवृत्तिं समाश्रितः।
योगीचेत्तस्य चित्तं हि भवत्येव विसंशयम् ॥

शब्दाद्यास्संविदशिचित्तं प्रकुर्वन्ति विसंशयम्।
श्रद्धा संवर्धते तेन सक्ष्ययोगेन सत्त्विकी ॥

नासाग्रादौ चित्तस्य संयमरुपाल्लक्षययोगात्तत्तद्विषयसाक्षात्कारः, तेन श्रद्धा, तया च ध्यानादौ स्थिरं चित्तं भवति। एवं पूर्वोक्तसाक्षात्कारेण मनसि संशया दूरीभवन्ति।

मानसस्य स्थितिं रोद्धुं चास्मितामात्रनामिका।
प्रवृत्तिस्सा समर्था स्यात् बुद्धिसंवेदरुपिणी ॥ ६४ ॥

ब्रह्मयोगो विशोकेति सूत्रेऽस्मिन् कथितः पदे।
ज्योतिष्टमत्त्याः प्रसङ्गाच्च शिवयोगोऽपि सूचितः ॥ ६५ ॥

विशोका वा ज्योतिष्मती (१-३६) इत्यस्मिन् योगसूत्रे मनसः स्थितिनिबन्धिनी काचित् प्रवृत्तिरुक्ता । आयासकृतक्लेशरहिता ज्योतिर्विषया चेयं प्रवृत्तिर्ब्रह्मशिवयोगौ सूचयतीति योगसिद्धान्तचन्द्रिका।

अथवा चित्तसंरोधे मानसं तद्विरागिणः।
आलम्ब्यते यदा चित्तं तदा तेनापि रुध्यते ॥ ६६ ॥

वैराग्यवतो मानसमपि योगी चित्तस्थैर्यमाप्नोति। निर्वासनं मनस्समाश्रीयत इति योगोऽयं वासनायोग इति कथ्यते।

स्वप्ने प्रबुद्धरूपं वा निद्राज्ञानं तथापि वा।
आलम्बते यदा चित्तं स्थैर्यं समश्नुते ॥ ६७ ॥

स्वप्ने पूर्ववासनाप्राप्तसत्त्वप्रधानं मनः भगवतो यद्रूपं प्रबुद्धं एवं निद्रादौ यत्सुखमनुभूयते तदालम्बनं चित्तं कृत्वा स्थैर्यं प्राप्नुयात्। अयमपि वासनायोगस्यावान्तरभेद इति चन्द्रिका ।

यदेवालम्बते चित्तं गुणवैषम्यदूषितम्।
ध्यायेदेतदनन्यस्सन् चित्तं तेनापि रुध्यते ॥ ६८ ॥

ध्यानयोग इति योगप्रकारोऽयं कथ्यते। यथाभिमतानां यथाभिमतेषु ध्यानमिति योगसिद्धान्तचन्द्रिका ।

वशीकारं समाप्नोति योगवित्स्थूलसूक्ष्मयोः।
[परमं तन्महात्स्थूले सूक्ष्मे चापरमाणु तत्] ॥ ६९ ॥

योगिनो हि चित्तं सूक्ष्मे निविशमानं परमाण्वन्तं स्थितिपदं लभथे स्थूले च महापरिमाणे। अयं सिद्धियोगः।

स्फटिकस्य यथोपाधेस्सान्निध्याद्रूपधारणम्।
तथा ग्राह्योपरक्तस्य मनसो रुपधारणम् ॥ ७० ॥

निर्मलस्य स्फटिकस्य यथा जपाकुसुमाद्युपाधिसान्निध्यात् रक्ताद्याकारता तथैव मनसः ग्राह्याद्याकारता।
पुरुषेन्द्रियभूतेषु क्रमशो मनसः स्थितिः।
तत्तदाकारसम्प्राप्तिस्समापत्तिरितीर्यते ॥ ७१ ॥

शब्दार्थधीविकल्पैश्च सुतरां भिन्नरुपिभिः।
संकीर्णा सा समापत्तिस्सवितर्केति कथ्यते ॥ ७२ ॥

शब्दधर्मा उदात्ताद्याः जाड्यादयोऽर्थवर्तिनः ।
प्रकाशो मूर्तिरहित्यञ्चेत्यन्ये ज्ञानवर्तिनः ॥ ७३ ॥

वैविध्ये वर्तमानेऽपि चैकत्त्वमेव सर्वशः।
भजन्ते च तथा सर्वे शब्दार्थज्ञानरुपिणः ॥ ७४ ॥

गोरित्युक्ते शब्दार्थज्ञानानि परस्परमभिन्नानि लोके भासन्ते। गौरिति शब्दः, गौरित्यर्थः, गौरितिज्ञानं- इति तेषां भिन्नताय धर्मेषु भिन्नत्त्वात्। अविद्यालेशसंबन्धदिदमपरं प्रत्यक्षम्।

स्मृतेर्विपरिशुद्धौ या वस्तुमात्रैव भासते।
निर्विर्केति नाम्ना सा समापत्तिर्निगद्यते ॥ ७५॥

शून्यत्त्वं भासते तस्यां स्वरुपस्य न शून्यता।
निर्विकल्पस्तथा चार्थस्तस्यां निर्भासते भृशम् ॥ ७६ ॥

तथैव भूतसूक्ष्मेषु समापत्तिश्च तादृशी।
सविचारेति विख्याता विषयस्सूक्ष्म एव सः ॥ ७७ ॥

शान्तादिधर्मशून्या या या सूक्ष्मविषया तथा।
निर्विचारा समापत्तिस्तुरीया चोत्तमा मता ॥ ७८ ॥

सङ्केतस्मृतित्यागे सति यत्राविकल्पितार्थनिर्भासस्सा निर्वितर्कसमापत्तिः। तन्मात्राहङ्कारादिषु सुक्ष्मेषु विकल्पितेषु समापत्तिस्सविचारा। तेष्वेव विशेषमशून्येषु अर्थमात्रेषु समापत्तिर्निर्विचारा। सम्प्रज्ञातस्य लययोग इति नामान्तरं सिद्धान्तचन्द्रिकायां दृश्यते।

तत् सूक्ष्मविषयत्त्वञ्च प्रधानान्तं प्रकथ्यते।
न त्वलिङ्गात् परं किञ्चित् सर्वतत्त्वेषु विद्यते ॥ ७९ ॥

सबीजोऽयं समाधिस्स्यात् सवितर्कादिभूमिभिः।
बीजस्यान्तो ह्यविद्या स्यात् सम्प्रज्ञातश्च तद्युतः ॥ ८० ॥

अशुद्ध्यादिमलापेतं बुद्धिसत्त्वं प्रकाशते।

यदा, तदा समाधिस्स्यान्निर्विचार इतीरितः ॥ ८१ ॥

आध्यात्मिकः प्रसादस्स्यात्प्रज्ञालोकस्तदा स्फुटः ।
ऋतम्भरा तदा प्रज्ञा सत्यं नित्यं बिभर्ति या ॥ ८२ ॥

यतः प्रज्ञा विशेषार्था यतस्सूक्ष्मं बिभर्ति सा।
श्रुतानुमानबोधाभ्यां ततो वैविध्यमश्नुते ॥ ८३ ॥

निरुध्यन्तेऽन्यसंस्काराः प्रज्ञासंस्कारवारिणा ।
तत्संस्कारनिरोधे स्यान्निर्बीजो योग इष्टदः ॥ ८४ ॥

दुःखबीजैर्यतश्शून्यस्ततो निर्बीजनामकः ।
समाधिर्मोक्षहेतुर्हि यस्मिन्वै केवलः पुमान् ॥ ८५ ॥

सवितर्कादिभेदवानसम्प्रज्ञातसमाधिरविद्यारुपबीजसत्त्वात् `सबीजसमाधिः' तच्छून्यस्त्वसम्प्रज्ञातसमाधि `निर्बीज समाधिः' । सबीजसमाधौ यदा निर्विचारो विशारदीभवति तदा सत्त्वोद्रेको भवति तस्मिन् सति ऋतम्भारा प्रज्ञा जायते। समाधिप्रज्ञाजन्यसंस्कारेण व्युत्थानसंस्कारा बाध्यन्ते। तस्यापि संस्कारस्य निरोधे निर्बीडजस्समाधिस्ततो मोक्ष इति क्रमो ज्ञेयः।

प्रणवादिपवित्राणां मन्त्राणां जपपूर्वकम्।
यस्य वै यावती शक्तिस्तावत्या तप आचरेत् ॥ ८३ ॥

क्रियाणां फलयुक्तानां सर्वासामपि चार्पणम्।
सर्वोत्तमे परे पुंसि क्रियायोग इतीर्यते ॥ ८४ ॥

समाधिर्भावनारूपः क्लेशानां शक्तिनाशनम्।
क्रियायोगेन सिद्ध्येते प्रसंख्यानाग्निदायके ॥ ८५ ॥

अविद्या ताल्मिका रागः द्वेषश्चाभिनिवेशनम्।
पञ्चैते कथिता योगे क्लेशाः प्रत्यूहकारकाः ॥ ८६ ॥

अविद्यामाश्रितास्सर्वे क्लेशा बीजामिवाङ्कुराः।
अविद्ययैव विर्धन्ते क्षीयन्ते चाप्यविद्यया ॥ ८७ ॥

सद्रूपा न त्वभावोऽसौ मिथ्याबुद्धिस्वरूपिणी।
नितरामप्यसद्द्रव्ये सद्बुद्धिर्जायते तया ॥ ८८ ॥

तपस्स्वाध्यायेश्वरप्रणिधानरूपक्रियायोगेन समाधिप्राप्तिः क्लेशानामविद्यादीनां नाशश्च सम्भवतः। यथाङ्कुरो बीजाश्रितो वर्धते तथैव चत्वारः क्लेशा अविद्याश्रिताय वर्धन्ते तयैव च क्षीयन्ते । अविद्या च न ज्ञानाभावः विभिन्नकार्यजननसामर्थ्यवत्त्वाज्ज्ञानमेव।

पुरुषस्य तथा बुद्धेरत्यन्तं सुविभक्त्योः।
मध्ये चैकात्मिका बुद्धिरस्मितेत्यभिधीयते ॥ ८९ ॥

अत्यन्तं भिन्नयोः बुद्धिपुरुषयोर्मध्ये ह्यभिन्नत्त्वधीरस्मितेति कथ्यते ।

सुखे तत्साधने गर्धो राग इत्याभिधीयते।
दुःखे तत्साधने मन्युर्द्वेष इत्यभिधीयते ॥ ९० ॥

`सुखे तत्साधने वा गर्धस्तृष्णा लोभ स राग' इति भाष्यवचनं, `दृश्यमानमपि हि सुखसाधनं तज्जातीयस्य सुखहेतुतां स्मृत्वा तज्जातीयतया

वास्य सुखहेतुत्वमनुमायेच्छति। इति मिश्रवचनमपि विषयेऽस्मिन्ननुसन्धातव्यम्।'

विदुषोऽपि सदाऽसक्तिर्जीवने वर्तते खलु।
अभिनिवेश इत्येषः क्लेशस्तत्रस्ति कारणम् ॥ ९१ ॥

क्लेशोऽयं स्वरसवाही स्वभावेन वासनारूपेण वहनशीलो न त्वागन्तुकः। माऽहमभावी भूवं सदा जीव्यासमिति पूर्वजन्मीयमरणदुःखानुभवहेतुकः मरणभयरुपः क्लेशः `अभिनिवेशः' पण्डितस्याप्यस्ति।

चित्तस्य विलयेनैते हेयाः क्लेशाश्च चित्तजाः।
क्लेशानां वृत्तयः स्थूलाः हेया ध्यैनेन योगिना ॥ ९२ ॥

क्लेशे सत्येव वर्तते धर्माधर्मै हि जीवने ।
वेदनीयौ यथा दृष्टे तथाऽदृष्टे च जन्मनि ॥ ९३ ॥

सुखदुःखे तयोर्जाते विपाकस्त्रिविधस्तयोः।
क्लेशमूलो विपाकोऽयं जात्यादिर्जीवने सदा ॥ ९४ ॥

जातिरायुश्च भोगश्च विपाकस्त्रिविधो मतः।
एकदेहभादेषो नन्वेकभविको मतः ॥ ९५ ॥

अविद्यादिपञ्चक्लेशेभ्यः धर्माधर्मरुपसंस्कारो वर्तमानभविष्यत्कालयोर्भोग्यो भवति। धर्माध्रमयोरेव सुखदुःखफलं जात्यादिविपाकश्च। जन्म, जीवनकाले, भोग इति त्रयं विपाक इति कथ्यते। एकस्मिन्नेव देहे फलस्य भावोऽस्तीति स एकभविकः चन्द्रिकायां विवृतः ।

विषयभोगगर्धस्य वृद्धिर्या दृश्यते नृषु।
परिणामो हि सा प्रोक्ता ज्ञेयोऽसौ दुःखदायनी ॥ ९६ ॥

तापस्तु द्वेष एवासौ भोगस्य परिपन्थिनि।
भोगस्य स्मृतिहेतुस्स्यात् संस्कारो दुःकदायिनी ॥ ९७ ॥

त्रिभर्वा कारणैरेभिर्गुणवैषम्यकारणात्।
भुञ्जतो विषयान् सर्वान् सर्वं दुःखम् विवेकिनः ॥ ९८ ॥

अपभोगेन चातींत दुःखं साध्वतिवाहितम्।
वर्तमानं तु भोग्यं तद् दुःखं हेयत्ववर्जितम् ॥ ९९ ॥

अनागतं यतो दुःखं बाधते योगिनं भृशम् ।
अतस्तद्धेयतामेति योगिनस्तत्त्वमिच्छतः ॥ १०० ॥

पुरुषस्य तथा बुद्धेस्संयोगो हेयकारणम्।
निष्क्रियस्सन् दृश्यं कारणं भोगमोक्षयोः ॥ १०१ ॥

सत्त्वं रजस्तमश्चैव ज्ञानव्यापारमोहदाः।
भूतेन्द्रियात्मकं दृश्यं कारणं भोगमोक्षयोः ॥ १०२ ॥

शब्दादिविषयाकारा तद्रूपनिश्चयात्मिका ॥
बुद्धिवृत्तिर्भवेद् भोगो बद्धवत्तेन पूरुषः ॥ १०३ ॥

भोक्तुस्स्वरूपविज्ञानं मोक्ष इत्येव दर्शनम्।
भोगमोक्षौ न पुंसस्तौ गुणनामेव केवलम् ॥ १०४ ॥

द्रष्टाऽसौ दृशिमात्रोऽपि शुद्धं प्रत्ययमीश्रते ।
बुद्धिवृत्तिविसंवेदात् परिणामीव भासते ॥ १०५ ॥

कार्यकारणरूपं तद्दृश्यं स्वार्थं कदाऽपि न ।
समीहस्तु यथाऽन्येभ्यस्तथा दृश्यं पराय वै ॥ १०६ ॥

कृतार्थं प्रति नष्टं तन्ननष्टं मूढचक्षुषे।
नशेर्धानेतोर्न लोपोऽर्थो नाशो भूयाददर्शनम् ॥ १०७ ॥

दृश्यस्यास्योपलब्धिर्या सा भोगनामिका मता ।
द्रष्टुस्स्वरूपलब्धिश्च मोक्षस्स्याद्योगदर्शने ॥ १०८ ॥

चितेश्चित्तस्य संयोगे त्वविद्या कारणं मतम्।
अविद्या सा यदा नष्टा संयोगोऽपि तथा गतः ॥ १०९ ॥

संयोगस्य ह्यभावोऽसौ हानमित्यत्युते बुधैः।
कैवल्ये केवलो जीवो गुण वा केवलास्तथा ॥ ११० ॥

हानप्राप्तेरुपायो हि विवेकख्यातिनामकः।
मिथ्याज्ञानविनिर्मुक्ता ख्यातिस्सा मोक्षकारणम् ॥ १११॥

दृश्यं नाम भूतेन्द्रियात्मकं, द्रष्टा नाम चैतन्यम्। दृश्यसान्निध्यवशात् पुरुषः परिणामीव, पुरुषसान्निध्यवशात् दृश्यं चैत्नयमिव च भासेते। सान्निध्यमथवा संयोग एव हेयकारणम्। यथा सम्यगलङ्कृतानि वस्तूनि तदिरभोगाय तथा च दृश्यं पुरुषदर्शनार्थं प्रवर्तते। मुक्तस्य अविद्या अदृष्टा भवति न तु सर्वेषाम्। अविद्याहेतुकसंयोगस्यास्याभावो हानम्। तत्प्राप्तिमार्गस्तु विवेक ज्ञानम् ।

तद्वितो योगिनः प्रज्ञा सुप्तधा जायतेऽमला।
प्रज्ञां सप्तविधां प्राप्य योगी कैवल्यमश्नुते ॥ ११२ ॥

१. ज्ञातव्यमखिलं ज्ञातं, न किञ्चिदपि ज्ञातव्यमस्ति- इत्येका।
२. हातव्यास्सर्वे हिताः न किञ्चिदपि हातव्यमस्ति- इति द्वितीया।
३. प्राप्तव्यमखिलं प्राप्तं न किञ्चन्मे प्राप्तव्यमस्ति- इति तृतीया।
४. कर्तव्यमखिलं कृतं न किञ्चन्मे कर्तव्यमस्ति- इति चतुर्थी।
५. कृतार्थं बुद्धितत्वम्- इति पञ्चमी।
६. गुणाः कृताधिकारा - इति षष्ठी
७. गुणातीतोऽहं स्वरुपमात्रावस्थितः सच्चिदेकरसः इति सप्तमी ।

योगिनो लक्ष्यसंसिद्धिस्साधनं हि समाश्रिता।
योगाङ्गानामनुष्ठानं साधनं चित्तनिग्रहे ॥ ११३ ॥

योगाङ्गानामनुष्ठानादशुद्धिर्नाश्यते ध्रुवम् ।
अशुद्धेश्च क्षये नूनं विवेको राजते महान् ॥ ११४ ॥

यमाश्च नियमाश्चैव ह्यासनम् श्रद्धया कृतम् ।
प्राणायामश्च तत्त्वेन प्रत्याहारस्तथैव च ॥ ११५ ॥

धारणाध्यानयोगाश्च योगाङ्गानि पृथग्विधाः।
ते न केनाऽप्यवच्छिन्ना सार्वभौमा महाव्रतम् ॥ ११६ ॥

अहिंसा सर्वभूतेषु मनोवाक्कायकर्मभिः।
सर्वत्र सर्वदा चैव त्वनुष्ठेया मुमुक्षुभिः ॥ ११७ ॥

तत्सापेक्षं तथा ज्ञेयं सप्तकञ्चोत्तरोत्तरम् ।
योगाङ्गनामनुष्ठानं ततो मुख्यं मुमुक्षउणः ॥ ११८ ॥

निस्सरन्ती वहिश्शक्तिर्योगङ्गैर्गृहयते यदा।
तदा संवर्धते सत्यं दैहिकं मानसं बलम् ॥ ११९ ॥

१. अहिंसा, सत्यं, अस्तेयं, ब्रहमचर्यं, अपरिग्रहः- यमाः
२. शौचं सन्तोषः, तपः, स्वाध्यायः, ईश्वरप्रणधानम्- नियमाः
३. पद्मश्वस्तिकादीनि- आसनानि
४. शअवासप्रश्वासयोः गतिविच्छेदः- प्राणायामः
५. इन्द्रियाणां चित्तस्वरूपानुकारः प्रत्याहारः
६. चित्तस्य विविधप्रदेशेषु स्थापनं- धारणा
७. एकरूपवृत्तिप्रवाहः ध्यानं
८. ध्येयस्यासन्दिग्धसर्वात्मना भानं - समाधिः

यमास्तु जातिदेशकालसमयैरनवच्छिन्ना महव्रतमित्युच्यते।

तेषां सम्यगनुष्ठानात् सिद्ध्यन्ते भिन्नशक्तयः।
अहिंसायाः प्रतिष्ठायां निवैरेण स्यवस्थितिः ॥ १२० ॥

सत्यस्यैव प्रतिष्ठायां हयमेघा जायते स वाक्।
उपस्थानं च रत्नानामस्तेयादेव सिद्ध्ययति ॥ १२१ ॥

ब्रहमचर्यप्रतिष्ठ्यां योगी समार्थ्यमश्नुते ।
परिग्रहे परित्यक्ते जानाति जन्मनः स्थितिम् ॥ १२२ ॥

शौचात् स्वाङ्गे, जुगुप्सा स्यादसंसर्गस्तथा परैः।
सन्तोषात् सुखसंप्राप्तिर्यस्या नास्त्येव तोलनम् ॥ १२३ ॥

तपो नाशयतेऽशुद्धिं श्रद्धया सम्यगाहितम्।
कायेन्द्रिमजयं योगी तस्मादाप्नोति हेलया ॥ १२४ ॥

स्वाध्यायादिष्टदेवानां साक्षात्कारश्च सिद्ध्यति।
देवता ऋषयो दिव्या वर्तन्ते योगिकर्मणि ॥ १२५ ॥

स्थिरं सुखकरं यत्तत् गृह्यतां सम्यगासनम्।
प्रयत्नोपरमाच्चिते, स्थिरे चित्तस्य धारणात् ॥ १२६ ॥

न शीतोष्णादिभिर्द्वन्द्वैरासनज्ञोऽभिभूयते।
जित्त्वा तत्प्रथमं वायोर्निग्रहे यत्नवान् भवेत् ॥ १२७ ॥

बाहयस्य ग्रहणं वायोर्नासा पूरकमुच्यते ।
विरोचनं ततस्तस्य विधिवद्रेचकाभिधम् ॥ १२८ ॥

तयोस्तु गतिविच्छेदः प्राणायामः प्रकीर्तितः।
पूरकः रेचकः कुम्भ इत्येषः कथिकस्त्रिधा ॥ १२९ ॥

दीर्घसूक्ष्मस्सुविख्यातश्चतुर्थः केवलो मतः ।
श्वासप्रशअवासशून्यो हि प्राणो भति केवले ॥ १३० ॥

प्राणायामात्प्रकाशस्य प्रावारः क्षीयते ध्रुवम् ।
धारणार्थं तदा योग्यं शुद्धं संजायते मनः ॥ १३१ ॥

(३)

नाभिचक्रादिदेशेषु बन्धश्चित्तस्य धारणा।
ध्यानं वृत्तिप्रवाहस्स्यात् समानश्च निरन्तरः ॥ १३२ ॥

ध्येयाकारविनिर्भासं ध्यानं समाधिसंज्ञकम्।
न रूपम् वस्तुतश्शून्यं समाधौ प्रत्ययात्मके ॥ १३३ ॥

बन्धध्यानसमाधीनां संज्ञा योगे तु संयमः।
संयमस्यैव संसिद्ध्या प्रज्ञादीपः प्रकाशते ॥ १३४ ॥

एकैकस्यास्तथा भूमेर्जयेनान्यगामिता ।
मनसः सिद्ध्यते नूनं तेन प्रज्ञा प्रदीप्यते ॥ १३५ ॥

अन्तरङ्गं त्रयं चेदं समाधेस्साधनात् परम्।
निर्बीजस्यापि योगस्य बहिरङ्गं त्रयंस्मृतम् ॥ १३६ ॥

योगसन्दर्भे संयमो नाम धारणा, ध्यानं समाधिश्च त्रयम्। एकस्मिन् वस्तुनि प्रत्ययान्तरहितं चितं समानप्रत्ययप्रवाहवत् सदर्थमात्रनिर्भासं यदा भवति तदा संयमः ज्ञेयः। एतादृशी मनसश्शक्तिरेकाग्रतरूपा सम्पादनीया। यमादिपञ्चभ्यः धारणाध्यानसमाधयोऽन्तरङ्गम्। साक्षात् स्वरूपोपकारकं त्रयम्। निर्बीजस्य समाधेस्तु साक्षादहेतुत्त्वात् बहिरङ्गम्।
परिणामस्त्रिधा प्रोक्तश्चित्तस्यास्थिरवर्तिनः ।
निरोधश्च समाधिश्च तथाचैकाग्रताभिधः ॥ १३७ ॥

व्युत्थानाभिभवस्सम्यक् निरोधस्य समुद्भवः।
सस्कारस्य गतिश्चित्रा निरोध इति कथ्यते ॥ १३८ ॥

समाधिपरिणामस्स्यात् द्वयोर्मानसधर्मयोः।
सर्वार्थताक्षयस्सम्यगेकाग्रत्वोदयस्तथा ॥ १३९ ॥

शान्तोदितौ पुनर्धर्मौ समानप्रत्ययौ यदा ।
ज्ञेय एकाग्रतारूपः परिणामश्चित्तधर्मिणः ॥ १४० ॥

क्षिप्तमूढविक्षिप्ताख्यं भूमित्रयं व्युत्थानम्। तत्र क्षिप्तं रजोगुणोद्रेकादस्थिरं, मूढं तमोगुमोद्रेकवत्, विक्षिप्तं सत्त्वोद्रेकाद्रजोविशिष्टं दुःखसाधनं परिहृत्य सुखसाधनेष्वेव शब्दादिषु प्रवृत्तं चित्तम्। व्युत्थानसंस्कारभिभवो नाम क्षिप्तिदित्रयस्य दाहः। निरोधसंस्कारसमुद्भवो नाम प्रकटतया वर्तमानाध्वनि समवस्थितिः। निरोधकालीनः परिणामश्चितं स्थिरं करोतीति सम्पादनीयो भवति। अयं निरोधपरिणामः। चित्तस्य सर्वर्थताया क्षयः, एकाग्रतायाः उदयश्च समाधिपरिणाम। तत्र द्वावतीतोत्पद्यमानौ सदृशप्रत्ययौ `एकाग्रतपरिणामो' भवति। सजातीयप्रत्यस्यैकैकस्य नाशे सति प्रत्ययान्तरं सजीतीं चोत्पद्यते।

व्याख्यातास्त्वनैव धर्मा भूतेन्द्रियेषु च।
एकधर्मपरित्यागे प्राप्तिर्धर्मान्तरस्य च।
प्रथमः परिणामस्स्यात् धर्मिणो स्थूलरूपिणः ॥ १४१ ॥

धर्माणाञ्चाप्यतीतादिकालभेदेन भिन्नता।
लक्षणाख्यो द्वितीयस्स्यात् परिणामो हि तत्त्वतः ॥ १४२ ॥

गवादोर्बाल्यकौमारं यौवनं वार्धकं तथा ।
अवस्थाख्यसतृतीयस्स्यात् परिणामस्स चान्तिमः ॥ १४३ ॥

एकस्य धर्मिणः पूर्वधर्मिनिवृत्तौ धर्मान्तरप्राप्तर्धर्मपरिणामः। यथा मृदः पिण्डभावत्यागेन घटभावः। वर्तमानावस्थाया अतीतावरस्थाप्राप्तिरूपः कालभेदेन भेदसम्पादको लक्षणपरिणामः। प्रचीनत्वार्वाचीनत्वादिभेदरुपः अवस्थापपरिणामः।

त्रयो वै धर्मिणो धर्माः धर्मो धर्मिषु योग्यता।
व्यापारश्रितधर्मस्य त्रैविध्यं सूत्रकृन्मतम् ॥ १४४ ॥

अतीता वर्तमानश्च धर्माश्चानागतस्तथा ।
वर्तते तेषु सर्वेषु तद्भिन्नो धर्मवान् सदा ॥ १४५ ॥

क्रमो यो यस्य धर्मस्य समनन्तताावहः ।
परिणामे क्रमो नित्यं नानात्वस्यास्ति कारणम् ॥ १४६ ॥

परिणामत्रये योगी संयमाज्ज्ञानवान् भवेत्।
अतीतानागतस्यापि सर्वस्यैव हि वस्तुतः ॥ १४७ ॥

शब्दार्थप्रत्ययानां हि संकरोऽध्यासमूलकः ।
सर्वभूतरुतं ज्ञानं तद्विभागस्य संयमात् ॥ १४८ ॥

संस्कारा द्विविधाः प्रोक्ता वासना आश्यास्तथा ।
वासना स्यात् स्मृतेर्हेतुर्विपाकस्यैव चाशयाः ॥ १४९ ॥

साक्षात्कारात्तथैतेषां संस्काराणां हि तत्त्वतः।
ज्ञानं स्वस्य परस्यापि जायते पूर्वजन्मनः ॥ १५० ॥

प्रत्यये संयमात् ज्ञानं परिचित्तस्य जायते।
न तत्सालम्बनं प्रोक्तं स्वचित्ताविषयीकृतेः ॥ १५१ ॥

योगीता तां ग्राह्यताशक्तिं प्रतिष्टभ्नाति संयमात्।
तन्मात्राणामतस्तस्यां ह्यन्तर्धानं प्रजायते ॥ १५२ ॥

विपाकोऽप्यायुषः कर्म द्विविधं कथ्यते बुधैः।
सोपक्रमं तदाद्यं स्याद्विवतीयं निरुपक्रमम् ॥ १५३ ॥

फलदं तीव्रवेगेन सोपक्रमितीर्यते ।
कर्म तन्मन्दवेगेन निरुपक्रममुच्यते ॥ १५४ ॥

द्वयोस्तु संयमाद्योगी ज्ञानमापद्यते महत्।
अरिष्टभ्यस्तथा वेत्ति मृत्योरागमनं तथा ॥ १५५ ॥

भावनासंयमाध्योगी हस्त्यदिष्वपि संयमात्।
अनुत्तमं तथा शीघ्रं तत्तदापद्यते बलम् ॥ १५६॥

ज्योतिष्मत्त्या प्रवृत्त्या च प्रकाशन्यासतश्च धीः।

सूक्ष्मस्य विप्रकृष्टस्य व्यवहितस्य जायते ॥ १५७ ॥

सूर्ये च संयमाज्ज्ञानं भुवनस्यापि जायते ।
ताराव्यूहगदिज्ञाने शशाङ्कध्रुवसंयमात् ॥ १५८ ॥

काव्यहस्य संबोधो नाभिचक्रे च संयमात् ।
क्षुत्पिपासाविनशश्च कण्ठकूपे च संयमात् ॥ १५९ ॥

संयमात् कूर्मनाड्यां च संयमी वर्तते स्थिरः ।
सुषुम्नायां तथा कृत्वा सिद्धानन्वीक्षते हि सः ॥ १६० ॥

प्रातिभे संयमं कृत्वा सर्वं जानाति हेलया ।
हृदये च तथा कृत्वा चित्तं जानाति संयमी ॥ १६१ ॥

अत्यन्तं तावसंकीर्णो प्रकृतिः पुरुषस्सदा ।
भोगस्तद्भेदशून्यत्वं परार्थत्वाच्च तत्त्वतः ॥ १६२ ॥

परार्थं तं सुविज्ञाया स्वारथे कृत्वा च संयमम्।
पुरुषं वेत्ति तं योगी विज्ञातारञ्च हेलया ॥ १६३ ॥

पुरुषे संयमाद्योगी बेह्वीस्सिद्धीस्समश्नुते।
प्रातिभं श्रावणं ज्ञानं वेदनाख्यं तथैव च ॥ १६४ ॥

आदर्शस्वादवार्ताश्च सिद्धयस्ताः पृथग्विधाः।
इन्द्रियं विषयं दिव्यं गृह्णातीत्येव सिद्धयः ॥ १६५ ॥

अन्तरायाश्च योगे ते प्रातिभाद्यास्तु सिद्ध्यः ।
व्युत्थाने सिद्ध्यस्तास्तु तस्मात्त्याज्या मुमुक्षुभिः ॥ १६६ ॥

कर्मबन्धक्षयाद्योगी चित्तसन्चारवेदनात् ।
अन्यदेहेषु चित्तं तद्धेलया संवं क्षिपत्यथ ॥ १६७ ॥

उदानस्य जायत्पङ्के जले वा कण्टकादिषु।
उत्क्रान्तिं लभते योगी तद्वायोश्चैव शक्तितः ॥ १६८ ॥

समानस्य जायद्योगी ज्वलत्यग्निवदेव वा ।
आकाशस्सर्वशब्दानां प्रतिष्ठा शब्दवारिधेः ॥ १६९ ॥

सम्बन्धे संयमं कृत्वा त्वाकाशकर्णयोस्तथा ।
दिव्यं श्रोत्रं समादत्ते योगी शब्दस्य कारणम् ॥ १७० ॥

लघुतूलसमापत्तेराकाशे डयते तथा ।
शरीरकाशसंबन्धे योगी कृत्वा च संयमम् ॥ १७१ ॥

स्थूलस्वरूपसूक्ष्मेषु तथान्वयार्थवत्त्वयोः।
संयमात् पञ्चभूतानां संयमी जयमश्नुते ॥ १७२ ॥

सिद्दीनामणिमाद्यानां प्राप्तिस्तेनैव सिद्ध्यते ।
कायसम्पत् समाप्तिश्च धर्मैश्चानभिभूतता ॥ १७३ ॥

ग्रहणञ्च स्वरूपञ्च तथैव चास्मितान्वयः ।
एतेषु संयमं कृत्वा संयमी जयतीन्द्रियम् ॥ १७४ ॥

बुद्धिपुरुषयोर्भेदं सम्यग्विज्ञाय संयमी।
सर्वज्ञस्सर्वभावानामधिष्ठाता च वै भवेत् ॥ १७६ ॥

तद्वैराग्यादशेषाणां दोषाणां बीजनाशतः।
कैवल्यं लभते द्रष्टा स्वरूपवस्थितिं ध्रुवम् ॥ १७७॥

तत्तद्भोगरसास्वादे देवैश्चोपनिमन्त्रितः।
सङ्गस्मयौ न वै गुर्याद्योगी पुनरनिष्टतः ॥ १७८ ॥

क्षणतत्क्रमयोर्योगी संयमाल्लभतेऽचिरात्।
ज्ञानं विवेकसम्पन्नं तारकं सर्वसंक्षयात् ॥ १७९ ॥

शुद्धिसाम्ये हि कैवल्यं प्रकृतेः पुरुषस्य च ।
सत्त्वाधिकारसम्बूर्तिर्द्रष्टुस्स्वरूपदर्शनात् ॥ १८० ॥

(४)

जन्मनश्चौषधेश्चैव मन्त्राच्च तपसस्तथा।
समाधेश्च प्रसिद्ध्यन्ति सिद्ध्यः पञ्चथा हि ताः ॥ १८१ ॥

मानवादिशरीरेभ्यस्तद् भिन्नदेहरूपता ।
प्रकृत्यापूरतो ज्ञेया धर्माधर्मानिमित्तिका ॥ १८२ ॥

धर्माद्या निमित्तं ते न कदापि प्रयोजकाः ।
कार्यं प्रावारभेदेन क्षेत्रिकोऽत्र निदर्शनम् ॥ १८३ ॥

कायान्तरं यदा योगी निर्मिमीते स्वशक्तितः।
तत्र निर्माणचित्तानि केवलाहंकृतेस्तदा ॥ १८४ ॥

व्यापारस्य हि नानात्वे चित्तमेकं प्रयोजकम् ।
तत्रापि ध्यानजं चित्तं कर्मशयविवर्जितम् ॥ १८५ ॥

सामान्यतस्तु सम्पूर्णा कर्माजितश्चुष्पदी।
शुक्ला पुण्यात्मनामेव कृष्णा तावददुरात्मनाम् ॥ १८६ ॥

शुक्लकृष्णा परेषां सा योगिनां तु कदापि न ।
तद्रूपश्च विपाकस्स्यात्तत्तज्जातीयकर्मणः ॥ १८७ ॥

अभिव्यक्ता विपाकेन तद्रूपाश्चैव वासनाः ।
देवतिर्यङ्मनुष्येओषु समानश्चर्च एव सः ॥ १८८ ॥

स्मृतिसंस्कारयोरैक्यं रुपे तावद् यतः स्थितम्।
अतो जात्यादिभिलिङ्गैर्व्यवहितोऽप्यनन्तरः ॥ १८९ ॥

कृषीवलो यथा केदारात् केदारान्तरं जलं निनीषुः प्रतिवन्धावरणभेदमात्रं करोति तथैव धर्मादि निमित्तं प्रकृतीनां परिणामेन प्रयोजकम्।

योगिनोऽहङ्कारादुत्पन्नेषु चित्तेषु व्यापारनानात्वे यिगनः चित्तमेकमेव प्रयोजकम्। जन्मादिपञ्चविधचित्तेध्यानजं चित्तमेव वासनारहितम्। चतुर्विधायां कर्मजात्यां शुक्ल, कृष्ण, शुक्लकृष्म अशुक्लकृष्णरूपायां चतुर्थी योगनां, यस्य यादृशं कर्म तदनुगुणमेव फलम् तस्य। पुनस्तत्फलानुगुणवासनानामभिव्यक्तिः सर्वेषु। संस्कारात् स्मृतिः, स्मृतेश्च भोगः, योगानुभवाच्य पुनः संस्कारस्मृत्यादयः- अतः जन्मशतेन, दूरदेशतया, कल्पशतेन वा व्यवहितानामपि वासानानां अव्यवहितवत् कार्यकारित्वं भति - इति भावः।

वासनानामनादित्वं नित्यत्वादाशिषस्तथा।
चित्तं तद्वासनाविद्धं चितेर्भोगाय कल्पते ॥ १९० ॥

हेतुफलाश्रयालाम्बैस्सङ्गृहीतास्तु वासनाः।
हेत्वादीनामभावे ता विनाशं यान्ति सर्वथा ॥ १९१ ॥

वासना न केवलं व्यवथानरहिता अपि चादिशून्याः। वासनस्ताः हेत्वादीनालम्ब्य प्रवर्तन्ते। तत्र हेतुः साक्षात्परम्परया वा- अविद्या, फलं शरीरादि स्मृत्यादि च , आश्यश्चित्तं, आलम्बनं यदेवालम्बनमनुभवस्य तदेव वासनानामपीति ज्ञेयम्। एषामभावे वासनानामप्यभावः।

वासनाश्च निवर्तेरन् कथं द्रव्यत्त्वसम्भवे।
इत्येवं वासनानाशे संदिह्यात्पुरुषः क्वचित् ॥ १९२ ॥

अतीतानगताः धर्माश्चित्तं धर्मि स्वरूपतः।
धर्माणामेव बेदोऽयं धर्मि भेदविवर्जितम् ॥ १९३ ॥

त्र्यध्वानो खल्वमी धर्मा व्यक्तसूक्ष्माश्च तत्त्वतः ।
गुणानां तन्निवेशात्ते गुणात्मानो भवन्ति च ॥ १९४ ॥

व्यक्तास्तु वर्तमानास्ते धर्मा, भूतेन्द्रियेषु च।
अतीतानागतास्सूक्ष्माः धर्मा भूतादिगोचराः ॥ १९५ ॥

अङ्गाङ्गिभावतस्तत्त्वं गुणानामेकमिष्यते।
परिणामो बहूनां हि तैलादीनां प्रदीपवत् ॥ १९६ ॥

त्रिष्वपि गुणेषु क्वचित् सत्तवमङ्गि क्वचिद्रजः क्वचिच्च तम इति गुणानामङ्गाङ्गिभावोऽस्ति। यद्यपि त्रयो गुणाः तथाऽपि तेषामङ्गिङ्गित्वात् वस्तुनमत्वमेकत्वम्। यथा तैलवस्तिवह्नीनामेकः प्रदीपपरिणामस्तथाऽयम्।

दृष्टं बहुविधं ज्ञानं वस्तुन्येकविधे तथा।
अतो ज्ञानार्थयोर्भिन्नः पन्था इत्येव निश्चयः ॥ १९७ ॥

एकस्यां रूपलावन्यवत्यां योषिति रागिणस्सुखं, सपत्न्यास्तु द्वेषः, वेदान्तिनस्तूदासीनता, परिव्राजकस्य घृणा- इत्येकवस्तुनि भिन्नप्रत्ययः दृश्यते।
अतः ज्ञानं विषयाद् भिन्नम्।

चित्तनाशे प्रमाणं न चित्तस्यातः स्वतन्त्रता।
ज्ञानसहभुवं चेत्थमर्थम् सूत्रे निरस्यति ॥ १९८ ॥

ज्ञानादतिरिक्तोऽर्थ इति भवतु, तथापि ज्ञानेनैव भास्यत्वात् सुखादिवद् भोग्यत्वात् ज्ञानसहभूरेवार्थ इति मतसमीचीनमिति वदति। सर्वजनसमानः स्वतन्त्रोऽर्थः, प्रतिपुरुषं प्रवर्तमानानि चित्तानि स्वतन्त्राणि।

अयोवद् विषयेमैतदुपरक्तञ्च मानसम्।
तमादत्ते जहात्यन्यमं ज्ञाताज्ञातास्तथा हि सः ॥ १९९ ॥

चित्तवृत्तिस्सदा ज्ञाता पुंसस्सा कूटवर्तिनः।

परिणमि यतश्चित्तं पुमाँस्तत्संविवर्जितः ॥ २००॥

स्वाभासं न कदाप्येतत् दृश्यत्वाच्चित्तमग्निवत्।
न ह्यग्निस्तमसा गूढः पूर्वं प्रकाशते ॥ २०१ ॥

अग्निवत् वृत्तय एव स्वप्रकाशा भवेयुः किं वृत्तिसंवेदिना पुरुषेणेति चेत्- न ; यतश्चित्तं परिणामि नीलादिवदतस्तत् स्वाभासं न भवति किन्तु स्वव्यतिरिक्तद्रष्ट्रापेक्षम्। चित्तस्य तु प्रकाशाप्रकाशादिधर्मवत्त्वात् गुणवैषम्यकारणेन वह्न्यादिदृष्टान्तमप्यत्र न सङ्गच्छत इति भावः ॥

स्वरूपार्थौ यतिश्चित्तं नादत्ते द्वयमेकदा।
स्वाभासं ततस्तन्न केवलं दृश्यमिष्यते ॥ २०२ ॥

वृत्त्यन्तरेण ग्राह्यत्वे वृत्तेरतिप्रसङ्गात् ।
अनन्तवृत्तिबोधे स्यादननन्तस्मृतिसंकरः ॥ २०३ ॥

चैतन्यं तदसंकीर्णं स्वबुद्धिवृत्तिवेदनम् ।
बुद्धिवृत्तिस्वरूपे तु तद्रूपं जायते पुनः ॥ २०४ ॥

मन्तव्यार्थोपरक्तं तत् सद्विषयञ्च मानसम् ।
द्रूष्टुदृश्योपरक्तं हि चित्तं स्वार्थमुच्यते ॥ २०५ ॥

चित्तं संहत्यकारित्त्वात् परार्थमिति कथ्यते ।
तदसंख्येयसंस्कारैश्चित्रितमपि गेहवत् ॥ २०६ ॥

सत्तवपुरुषयोर्भेदं जानाति संयमी च यः ।
विनिवृत्ता भवत्सय् तदात्मभावभावना ॥ २०७ ॥

विषयैः पूर्णमज्ञानाच्चित्तं ज्ञानोदये पुनः।
कैवल्याभिमुखं याति विवेकख्यातिभारतः ॥ २०८ ॥

ये समाध्यन्तरालेषु जाताश्चेतप्रत्ययाः ।
ज्ञेया व्युत्थानसंस्कारैर्नाशयाश्चित्तविनाशनात् ॥ २०९ ॥

यथा क्लेशा न रोहन्ति वह्नौ प्रदग्धबीजवत्।
संस्काराश्च तथा पूर्वे ज्ञानदग्धा विनाशिताः ॥ २१० ॥

धर्ममेधस्समाधिस्स्यात् प्रसंख्यानेऽप्यरागिणः ।
विवेकख्यातितो ज्ञेयस्समाधिः क्लेशनाशकः ॥ २११ ॥

सम्प्रज्ञातपराकाष्ठा नूनं धर्मस्य वर्षकः ।
धर्ममेघो महान् योगे मार्गः कैवल्यदायकः ॥ २१२ ॥

तस्य लाभादविद्याद्याः ळक्लेशास्सर्वेऽपि नाशिताः ।
कर्माशयाश्च सम्पूर्णं ते भवन्ति विनाशिताः ॥ २१३ ॥

सर्वक्लेशविनिर्मुक्तं सर्वदोषववर्जितम् ।
अनन्तं जायते ज्ञानं ज्ञेयमल्पं हि भासते ॥ २१४ ॥

गुणानां तु कृतार्थानां समाधेरुदयात्तथा।
समाप्तः परिणामस्य क्रमो भोगोपयोगिनः ॥ २१५ ॥

वर्तमाना गुणानाञ्च सा परिणामिनित्यता।
कृटस्थनित्यतता पुंसो ज्ञेया सा नित्यता द्वयोः ॥ २१६ ॥

क्षणद्वन्द्वी क्रमो ज्ञेयस्य क्षणप्रचयाश्रयः।
क्रमोऽपरान्तनिर्ग्राह्यः परिणामनस्य तत्त्वतः ॥ २१७ ॥

समाधेरुदयात् कृतार्थानां गुणानां भोगपयोगिनः परिणामस्य क्रमस्समाप्तो भवति। क्रमस्य निरूपकः क्षणः तादृशक्षणप्रचयाश्र एव क्रमः निष्कृष्यापरान्तेन ग्राह्यः। मृदि पिण्डघटकपालचूर्णकाणानां पूर्वान्तः पिण्डः अपरान्तः कणः इतीति योगसुधाकरः।

पुरुषार्थे विनिष्पन्ने तच्छून्यो मोहको गुणः।
प्रतिप्रसवमावपन्नः केवलो विद्यते सदा ॥ २१८ ॥

तदा बन्धविनिर्मुक्तः पुरुषो निर्गुणस्सदा।
स्वरूपावस्थितो योगे चैतन्याख्यस्तदा भवेत् ॥ २१९ ॥

बन्धमोक्षौ न देहस्य न वा पुंसः कदाचन।
बन्धोऽयं चित्तरागस्स्यानमोक्षस्स्यादविरागिता ॥ २२० ॥
***************

पातञ्जलं महत्सूत्रं व्यासभाष्यकरं तथा।
वाचस्पतेस्तथान्येषां वाक्यञ्चलाम्ब्य तत्त्वतः ॥

श्लोकेषु योगसूत्राणां निबन्धोऽयं कृतो मया।
अहं तु करणं चास्मिन् कारणं गुर्वनुग्रहः ॥